पदार्थादर्शव्याख्योपेतम्

प्रथमो भागः

कुलपतेः डॉ० मण्डनमिश्रस्य प्रस्तावनया समलङ्कृतम्

सम्पादकः

आचार्यश्रीकरुणापतित्रिपाठी

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वाराणसी

YOGATANTRA-GRANTHAMĀLĀ

[ Vol. 27 ]

# ŚĀRADĀTILAKAM

OF

ŚRĪ LAKṢMAṆA DEŚIKENDRA

[ PART ONE ]

With the Commentary

'PADĀRTHĀDARŚA'

BY

ŚRĪ RĀGHAVA BHAṬṬA

FOREWORD BY

DR. MANDAN MISHRA

VICE-CHANCELLOR

EDITED BY

ĀCĀRYAŚRĪ KARUṆĀPATI TRIPĀṬHĪ

Ex-Vice-Chancellor

Sampurnanand Sanskrit University, Varanasi

&

Ex-President

Uttar Pradesh Sanskrit Academy, Lucknow

VARANASI

1997

**Research Publication Supervisor—**
**Director, Research Institute,**
Sampurnanand Sanskrit University
Varanasi.

**Published by—**
**Dr. Harish Chandra Mani Tripathi**
Publication Officer,
Sampurnanand Sanskrit University
Varanasi–221 002.

**Available at—**
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi–221 002.

First Edition, 1000 Copies
Price–Rs. 150.00

**Printed by—**
MADHO PRINTERS
K-48/6, Narayan Dixit Lane
Varanasi.

योगतन्त्र-ग्रन्थमाला

[ २७ ]

श्रीलक्ष्मणदेशिकेन्द्रविरचितं

# शारदातिलकम्

श्रीमद्राघवभट्टकृतपदार्थादर्शव्याख्याविभूषितम्

## [ प्रथमो भागः ]

कुलपतेः डॉ० मण्डनमिश्रस्य प्रस्तावनया समलङ्कृतम्


सम्पादकः

आचार्यश्रीकरुणापतित्रिपाठी

कुलपतिचरः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी

अध्यक्षचरश्च

उत्तरप्रदेशसंस्कृताकादम्याः, लखनऊ


वाराणस्याम्

२०५४ तमे वैक्रमाब्दे १९१९ तमे शकाब्दे १९९७ तमे खेस्ताब्दे

अनुसन्धान-प्रकाशन-पर्यवेक्षकः —
निदेशकः, अनुसन्धान-संस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।

▫

प्रकाशकः —
डाॅ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२.

▫

प्राप्ति-स्थानम् —
विक्रय-विभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी–२२१ ००२.

▫

प्रथमं संस्करणम्, १००० प्रतिरूपाणि
मूल्यम् — १५०=०० रूप्यकाणि

▫

मुद्रकः —
माधो प्रिन्टर्स,
के. ४८/६, नारायण दीक्षित गली
वाराणसी ।

# प्रस्तावना

जीवस्येश्वरस्य च किं स्वरूपम्? कश्चानयोः परस्परं सम्बन्धः? धर्मार्थ-काममोक्षाख्यपुरुषार्थचतुष्टयस्य कानि लक्षणानि? कथं नु किल प्रवर्तते सृष्टि-संहारयोः प्रक्रिया? ईदृशानां प्रश्नानां समाधानमुखेनेदंप्रथमतया वेदा एव समक्ष-मुपतिष्ठन्ते। ईदृशवेदप्रतिपादितकर्मोपासनाज्ञानाख्यकाण्डत्रितये विशेषतो वर्णाश्रमिणा-मेवाधिकारदर्शनात् कलौ वर्णाश्रमाणां शैथिल्यात् कलियुगीयमानवानां कल्याणाय परमेश्वरेण परमकरुणया आगमशास्त्राणां प्रणयनमकारि। इदमागमशास्त्रं तन्त्रशास्त्रमपि प्रोच्यते। उक्तञ्च—

**तनोति विपुलानर्थान् तत्त्वमन्त्रसमन्वितान्।**
**त्राणं च कुरुते यस्मात् तन्त्रमित्यभिधीयते॥**

एवञ्च मन्त्रतत्त्वसमन्वितविशिष्टार्थवितानकत्वे सति भयेभ्यस्त्राणकर्तृत्वं तन्त्रत्वमिति पर्यवस्यति। आगमस्यापि स्वरूपमुक्तमस्ति स्वच्छन्दतन्त्रे—

**आगतं शिववक्त्रेभ्यो गतं च गिरिजामुखे।**
**मतं हि वासुदेवस्य तस्मादागम उच्यते॥**

एवञ्च शिवमुखादागत्य गिरिजाश्रवणविषयतामनुभावकत्वमागमत्वमिति फलति। एष्वागमशास्त्रेषु तत्तन्मन्त्रसाधकानि शक्तितत्त्वसाधकानि च बहून्यागम-ग्रन्थरत्नानि आचार्यैर्विरचितानि। तत्र तेषां बहुत्वेन गौरवमालोच्य पूज्यपादो-त्पलाचार्यशिष्यः श्रीलक्ष्मणाचार्य एकस्मिन्नेव ग्रन्थविशेषे सर्वमन्त्रविधानगर्भं **शारदातिलक**नामानं तन्त्रग्रन्थसारं व्यरीरचत्।

## शारदातिलकशब्दस्य व्युत्पत्तिलभ्योऽर्थः

शीर्यते इति सारम्, स्थूलं कर्मफलम्, 'शॄ विशरणे' इत्यस्माद् धातोः कर्मणि घञ्प्रत्ययः। तद् ददाति या सा शारदा। आदन्ताद् दाधातोः कर्तरि कप्रत्ययः। अथवा तादृशं कर्मफलं कृपाकटाक्षेण द्यति खण्डयतीति शारदा चिच्छक्तिः। तस्यास्तिलको भूषणम्। अनेनास्य ग्रन्थस्योत्कर्षातिशयः प्रदर्शितः।

## अत्रोपवर्णिता विषयाः

सकारणा शब्दार्थसृष्टिः, यन्त्र-मन्त्राणां विधिः, निर्गुणसगुणभेदेन द्विविधः शिवः, सच्चिदानन्दस्वरूपात् परमशिवात् शक्तिसमुद्भवः, ततो नादः, नादाद् बिन्दुः, परशक्तिमयादस्माद् बिन्दोर्बिन्दुर्नादो बीजं चेति त्रितयम्, तत्रायं बिन्दुः शिवात्मा, बीजं शक्तिः, तयोर्मिथः समवायो नादः, पुनश्च परात् बिन्दोरव्यक्तात्मा रवः, स एव शब्दब्रह्म, तच्च चेतनम्। पुनश्च बिन्दोः परा-पश्यन्ती-मध्यमा-वैखरीति वाक्चतुष्टयस्य क्रमिकः प्रकाशः, अकारादिक्षान्तवर्णशिवस्योपाधिभूतायाः

शक्तेः षट्त्रिंशत्संख्याकतत्त्वानां समुत्पत्तिरित्यादिविषयाः सम्यग्रूपेणात्र विवेचिताः। अत्र च अकारादिवर्णानां संख्या, स्थानम्, प्रयत्नः, उच्चारणविधिश्च, द्विचत्वारिंशदक्षरसङ्केतिनी भूतलिपिः, अङ्गन्यास-करन्यासयोः प्रकारः, प्राणायामविधिः, कुण्डमण्डपनिर्माणविधिः, हवनविधौ नानाविधद्रव्याणां निरूपणम्, गुरुशिष्यलक्षणम्, तयोः कर्तव्यविधिश्च, भुवनेश्वरी-दुर्गा-त्रिपुरा-मातङ्गी-मातङ्गेश्वरी-वागीश्वरी-भुवनेश्वरीदेवीनां पूजाविधिः, वशीकरण-नानारोगनिवारण-राजसम्मान-शत्रुविजयप्रभृतिफलानि विशेषतो द्रष्टव्यानि।

ग्रन्थस्यास्य सम्पादका विश्वविद्यालयस्यास्य पूर्वकुलपतयः **आचार्य-श्रीकरुणापतित्रिपाठि**महोदया विभिन्नानां संस्कृतशास्त्राणां विशिष्टा अध्येतारः, सक्षमाश्च व्याख्यातारः। अत एव तेषां लेखन्या भारतीयचिन्तनस्य विविधानां पक्षाणां विवेचनं कृतम्। तेश्चैकत्र स्कन्दपुराणान्तर्गतस्य **'काशीखण्डस्य'** सम्पादनेन, तद्द्वारा च विभिन्नानां स्तोत्राणां व्याख्यानेन, अपरत्र च **'शारदातिलक'**-सदृशानां तन्त्रग्रन्थानां सम्पादनेन संस्कृतसाहित्यस्य श्रीवृद्धिः सम्पादिता। श्रद्धेयाः श्रीत्रिपाठिनो विद्यातपोमूर्त्तयो भारतीयविद्याया विविधाङ्गानां सुप्रसिद्धा मनीषिणो महान्तश्च तत्त्वचिन्तकाः। यथा हि प्राचीनाचार्येषु बहुविधानां विद्यानां सङ्गम आसीत्, तथैवैतेष्वपि ज्ञानविज्ञानस्य त्रिवेणी साक्षादवलोक्यते। दिल्लीस्थ-श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठेन (मानितविश्वविद्यालयेन) **'वाचस्पतिः'** इति सम्मानोपाधिना, उत्तरप्रदेशसंस्कृतसंस्थानेन **'संस्कृतविश्वभारती'**-पुरस्कारेण च सम्मानिताः श्रीत्रिपाठिनो वाराणस्या गौरवभूताः स्वकीयया साधनया संस्कृतवाङ्मयमनुगृह्णन्तीति महतो हर्षप्रकर्षस्य विषयः। तेषामिदं योगदानं तेषामनुग्रहस्यैव फलत्वेन विश्वविद्यालयोऽयं शिरसा धारयन् स्वकीयां कृतज्ञतामभिव्यञ्जयति। ग्रन्थस्यास्य प्रकाशने प्रकाशनाधिकारिणां **डॉ० हरिश्चन्द्रमणित्रिपाठि**नाम्, 'माधो-प्रिन्टर्स'-यन्त्रालयसञ्चालकानां **श्रीराहुल-सहायविसारिया**महोदयानां च श्रमं सादरं सधन्यवादमङ्गीकुर्वन्नहं ग्रन्थस्य प्रकृतमिमं प्रथमभागं पाठकेभ्यः समुपहरामि।

**वाराणस्याम्**
**मार्गशीर्षपूर्णिमायाम्,**
**वि० सं० २०५४**

**मण्डनमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# प्रास्ताविकम्

निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः ।
निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः ॥
शब्दब्रह्मेति तं प्राहुः सर्वागमविशारदाः ।
शब्दब्रह्मेति शब्दार्थं शब्दमित्यपरे विदुः ॥

वैष्णव-शैव-शाक्त-गाणपत्य-सौराख्यतन्त्राणां श्रेष्ठसङ्ग्रहरूपं सकलार्थप्रतिपादकत्वेन शुभम्, धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयस्य प्राप्तये प्रधानं कारणं शारदातिलकमस्ति तन्त्रग्रन्थविशेषः । तत्र—

शीर्यते इति शारं कर्मफलम्, तद्दातीति शारदा तत्तत्कारणत्वेन ब्रह्मविद्याधिरूढा सती द्यति खण्डयति ता इति वा शारदा चिद्रूपा शक्तिः । यद्वा शरः स्वतन्त्रम्, तस्य भावः शारः स्वातन्त्र्यम्, तद्दातीति । अनाद्यविद्यापरिच्छेद्यजीवभावनिरासेन परमैश्वर्यप्रदायिका । एतच्चोक्तं तन्त्रव्याकरणे गौतमेन—

'शरः स्वतन्त्रं हृदयं स्फुरत्ता परमेशिता ॥ इति ।

तस्याः शारदायास्तिलको भूषणम् । यथा मुखे वर्तमानस्तिलकः सर्वतः प्रथमं दृश्यतामायाति, तथैव अयं महनीयग्रन्थोऽपि ।

अस्य श्रीशारदातिलकग्रन्थस्य तन्त्रविषयप्रतिपादकतया आगमविषयप्रकाशकतया च सुप्रसिद्धिरस्ति । अतस्तन्त्रागमशब्दार्थविमर्शः कर्तव्योऽस्ति, येन द्वयोस्तन्त्रागमयोः सम्बन्धः स्पष्टीभवेत् ।

## तन्त्रशब्दार्थविमर्शः

'तन्यन्ते विस्तीर्यन्ते ऐहिकामुष्मिकाभ्युदयनिःश्रेयससाधका उपाया येन' इति व्युत्पत्तिलभ्यार्थदृष्ट्या योगरूढोऽयं तन्त्रशब्द इति प्रतिभाति । तत्र 'तनु' विस्तारे इति तनादिगणीयधातोः करणेऽर्थे "सर्वधातुभ्यः ष्ट्रन्" इत्यौणादिकसूत्रेण ष्ट्रन्प्रत्यये कृते सति निष्पन्नता तन्त्रशब्दस्य । अथवा 'तन्त्रि' कुटुम्बधारणपोषणयोरित्यस्माच्चौरादिकाद् धातोः कर्मणि करणे अधिकरणे वा "अकर्तरि च कारके संज्ञायाम्" इति पाणिनीयसूत्रेण घञ्प्रत्यये कृते सति 'तन्त्र्यते यत्, येन, यत्र वा' इति व्युत्पत्तिभिस्तन्त्रशब्दः साधुत्वं भजते ।

ततश्च "समाजस्य धारकत्वं पोषकत्वं वा तन्त्रत्वम्" इति "नियमविशेषनियन्त्रितलोकत्वं वा तन्त्रत्वम्" इति वा परिष्कृतस्वरूपं लभ्यते । तथा चोक्तम्—

तनोति विपुलानर्थान् तत्त्वमन्त्रसमन्वितान् ।
त्राणं च कुरुते यस्मात् तन्त्रमित्यभिधीयते ॥
व्यवहारः कथ्यते यत्र तथा चाध्यात्मवर्णनम् ।
इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते ॥ इति ।

## आगमशब्दार्थविचारः

आङ्पूर्वकाद् गम्धातोर्गत्यर्थकाद् भौवादिकाद् 'ग्रहवृदृनिश्चिगमश्च' इति पाणिनीयसूत्रेण कर्मणि करणेऽधिकरणे वा अप्प्रत्यये सति 'आगम्यते यो येन यत्र वा' इति विग्रहे आगमशब्दस्य निष्पत्तिर्भवति । ततश्च गतिः, प्राप्तिः, ज्ञानं वा स्वीकृत्य सम्यक्प्राप्तिविषयः, सम्यक्प्राप्तिसाधनम्, सम्यग्ज्ञानाधिकरणम् इति त्रयोऽर्थाः परिस्फुरन्ति । तत्र सम्यक्प्राप्तिविषयता मोक्षरूपपुरुषार्थस्यैव भवितुमर्हतीति मोक्षतत्त्वम्, मोक्षसाधनत्वम्, आगमत्वमिति आद्यविग्रहद्वयीयोऽर्थः । तृतीयविग्रहेण तु सम्यग्ज्ञानमात्मज्ञानमेव तदधिकरणमात्मैवेति आत्मैव आगमपदार्थ इति निश्चेतुं शक्यते । आभिर्व्युत्पत्तिभिर्मोक्षतत्त्वस्य ज्ञापकत्वम्, साधनत्वम्, आत्मतत्त्वविवेचकत्वं वा आगमत्वमिति पर्यवस्यति । तच्च समाजस्य पोषणमन्तरा न सम्भवतीति "समाजपोषणनियमविशेषज्ञापकत्वे सति आत्मतत्त्वस्य ज्ञापकत्वमनुशासकत्वं वाऽऽगमत्वमिति परिष्कृतं लक्षणस्वरूपमनुमन्तव्यम् । समाजपोषकत्वं तन्त्रत्वमित्यत्र समाजस्य पोषणं किमर्थमिति विमर्शे क्रियमाणे आत्मज्ञानार्थमेवेत्युत्तरं कर्णगोचरं भवति । एवञ्च तन्त्रपदार्थस्य फलमागमपदार्थः, आगमपदार्थस्य साधनं तन्त्रपदार्थः । द्वयोरनयोः साध्यसाधनभावेनैव अन्वयसङ्गतिः । अतश्च योगरूढ्या तन्त्रागमशब्दार्थयोः साम्यं दृष्ट्वा, तान्त्रिकैरन्यैर्वा विद्वद्भिरभेदेनानयोर्व्यवहारः सम्पादितः ।

तथा हि—मृगेन्द्रतन्त्रम्=मृगेन्द्रागमः, शैवतन्त्रम्=शैवागमः, भैरवतन्त्रम्=भैरवागम इत्यादि । तथा च "मालिनीविजयवार्तिके" ( पृ० ३६-३८ ) तदनुगामिनि "तन्त्रालोकविवेके" ( भा० १, पृ० ३६-४१ ) शिवस्य पञ्चवक्त्रेभ्यो दशानां शैवागमानामष्टादशानां च रौद्रागमानां चतुःषष्टिसंख्याकानां च भैरवागमानामाविर्भावप्रकारो निरूपितो वर्तते । तेषु स्थलेषु आगमशब्देन तन्त्रस्य ग्रहणं सुस्पष्टमभिहितमस्ति ।

तान्त्रिक-वैदिकसिद्धान्तयोर्बहुविधा विभिन्नता दृश्यते । तन्त्रेषु स्त्रीशूद्रादीनामधिकारो विद्यते । वेदाध्ययनेऽध्यापने वा तेषामधिकारो न वर्तते । वाक्चतुष्टयात्मकस्य विशेषतः पराख्यवाग्ब्रह्मण उपासनं षडध्वमुखेन जगत्सर्जनप्रलयौ च तन्त्रशास्त्रीयं प्रमुखं वैशिष्ट्यम् । यद्यपि वेदाङ्गभूते व्याकरणागमेऽपि शब्दब्रह्मणो महिमा उपासनं च तत्र तत्र वर्णितमस्ति । तथा च तत्प्रतिपादिका श्रुतिरपि—

"चत्वारि वाक्परिमिता पदानि[१]" इत्यादिका। अथ च "अकारः सर्ववर्णाग्र्यः", "अनयोः सामरस्यं तत्परस्मिन्नहमि स्फुटम्" इत्यादिसङ्केतपद्धतिव्याख्यातोऽर्थो बहुत्र श्रुतिष्वपि उपलभ्यते। तथा हि—"अकारो वै सर्वा वाक्[२]", "वाचीमा विश्वा भुवनान्यर्पिता", "वागक्षरं प्रथमजा ऋतस्य", "अनाहतशीर्ष्णो वाग् जुषाणा सोमस्य तृप्यतु", इत्यादीनि आरण्यक-ब्राह्मण-संहितावचनानि द्रष्टव्यानि। अस्यां स्थितावपि शब्दब्रह्मणः प्रपञ्चो यादृशस्तन्त्रेषु दृश्यते, न तथा वेदेषु तदङ्गेषु च।

भगवतो बुद्धस्य महावीरस्य च समये तिस्रो दृष्टयः प्रचलिता आसन्। ताश्च वेदानुगामिन्यः, वेदविरोधिन्यः, स्वतन्त्राश्चेति। तत्र सौगतानां जैनानां च दृष्टयो वेदविरोधिन्यः, सांख्य-योग-पाञ्चरात्रादीनां स्वतन्त्राः, साम्प्रतं तु पाञ्चरात्रिकाः शैवाश्च वेदमनुसरन्त्य एवानुभूयन्ते। स्वतन्त्रा दृष्टयो गच्छता कालेन स्वातन्त्र्यं परिहृत्य वेदप्रामाण्यं भजमाना अभवन्।

यद्यपि भारतीये वाङ्मये निगमागमशब्दयोः समानेऽर्थे प्रयोगो बहुत्र दृश्यते। यथा श्रीभर्तृहरिणा आगमशब्दस्य निगमार्थे प्रयोगः कृतोऽस्ति[३]। पुनश्च परवर्तिकाले शैवरौद्राद्यागमेषु वैष्णवाद्यागमेष्वपि च प्रयुक्तो निगमशब्दः। तन्त्रशब्दोऽपि आगमसमानार्थक एव, वैष्णवाद्यागमेषु लक्ष्मीतन्त्र-पाद्मतन्त्रप्रभृतिग्रन्थदर्शनात्। एवं सत्यपि शैवेषु वैष्णवेषु चागमशब्दः, बौद्धेषु शाक्तेषु च तन्त्रशब्दः प्राचुर्येण प्रयुक्तो दृश्यते। अस्यां स्थितौ आगमतन्त्रयोरनर्थान्तरत्वेऽपि निगमपदाभिधेयापेक्षया वैलक्षण्यमस्त्येव। यद्यपि—

**स्वयं प्रामाण्ये तानि न हातव्यानि हेतुभिः।**

इत्याद्युक्त्या,

**सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा।**
**ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै[४]॥**

इत्याद्युक्त्या च आगमादीनामपि प्रामाण्यं वेदतुल्यतां भजते। तथापि भगवता वेदव्यासेन ब्रह्मसूत्रतर्कपादे वेदबाह्यैः बौद्धजैनमतैः सहैतेषां मतानां वेदानभिमतत्वं निरणायि। श्रीशङ्करभगवत्पादैस्तथा व्याख्यातमपि।

"विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम्", "हेतुदर्शनाच्च" इति जैमिनीयं सूत्रद्वयं व्याचक्षाणैः श्रीकुमारिलभट्टपादैरपि सांख्य-योग-पाञ्चरात्र-पाशुपत-जैन-सौगतमतानां वैदिकास्पष्टतया प्रोक्तम्।

---

१. ऋ० सं० १।१।१६४।४५; २. ऐ० आ० २।३।६।

३. वा० प० १।१।१३२।

४. महाभारतम् शा०, मो० ३४९-६४,३ ; जैमिनीयं सूत्रम् —१।३।३-४।

यद्यपि परवर्तिकाले श्रीयामुनाचार्यप्रभृतिभिः पाञ्चरात्रादितन्त्राणां वैदिकत्व-साधने प्रयासः कृतः। "त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति" इति महिम्नः-स्तोत्रदृष्ट्या श्रीभास्कररायप्रभृतिभिश्च[१] तन्त्राणां स्मृतितुल्यत्वं च प्रसाधितम्। तथापि—तेषु तेषु तन्त्रग्रन्थेषु वेदानामवरशासनत्वं दृश्यमानं वेदविरोधं स्पष्टं प्रतिपादयति[२]। विरुद्धसैद्धान्तिकमेतन्मतद्वयं वैदिकं तान्त्रिकं चेति निर्णयन्ति इतिहासरहस्यविदोऽपि। तथा हि–सिन्धुसभ्यताचिह्नानां शिवलिङ्ग–वृषभयोगि-प्रभृतीनां दर्शनाद् वैदिकसभ्यतातो भिन्ना तत्र काचित् सभ्यताऽऽसीत्। तत एव तान्त्रिक्याः सभ्यताया उद्भवो मन्यते। वैदिकसभ्यतयाऽस्याः सङ्क्रमे द्वयोः प्रायेण मिश्रणं समजायत। अस्मिन्नेव सङ्क्रमेऽथर्ववेदे तान्त्रिकं कर्मकाण्डम्, यजुर्वेदे च तान्त्रिकः शिवो रुद्रात्मना प्रतिष्ठितोऽभवत्। वैदिक्यां तु विशिष्टानामेव, अपरत्र तु साधारणानामपि जनानां प्रवेशोऽधिकारश्चास्ति[३]।

**अत्रायं निष्कर्षः**

यद्यपि बौद्धार्हतयोरिव तन्त्रशास्त्रेषु पाञ्चरात्रादिषु सर्वथैव वेदप्रामाण्यं न प्रत्याख्यातम्, तथापि लोकसङ्ग्रहार्थं क्वचिदंशेषु प्रत्याख्यातमेव। वेदविरुद्धमप्येतन्मतं भारतीये समाजे समादृतमभूत्। उत्तरे भारते सिद्ध-नाथ-सन्तप्रभृतीनां वाक्येषु, दक्षिणे च भारते आलवरादीनां परम्परासु साम्प्रतमपि तान्त्रिकदृष्टिप्रवाहो निर्बाधं प्रवहत्येव।

यथा ब्रह्मा पूर्वकल्पस्थितान् वेदान् स्मृत्वोपदिशति, तथैव शिव-नारायण-बुद्ध-प्रभृतिभिस्तानि तानि तन्त्राण्यपि ऋषि-मुनि-परम्परासु उपदिश्यन्ते। अनेन रूपेण तन्त्रशास्त्रस्यापि वेदवद् अपौरुषेयत्वमेव स्वीक्रियते तन्त्रसम्प्रदायनिष्णातैः। काल-क्रमेण तन्त्रशास्त्रं नानाशाखोपशाखासु विभक्तमभवदिति तन्त्ररहस्यम् अद्यत्वे वर्णाश्रम-शैथिल्यं भजमाने लोके बहुजनहिताय वेदनीयमास्ते।

---

१. वरिवस्यारहस्यप्रकाशे, पृ० ७।

२. (क) उत्तमाः पञ्चरात्रस्था मध्यमास्तु त्रयीमयाः। ( लक्ष्मीतन्त्रम्—२२।३६ )
(ख) सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम्। ( कुलार्णवे—२।७ )

३. 'अस्यां च पूजायां सर्वजातीनामधिकारः' इत्यादिना सन्दर्भेण सौभाग्यभास्करे एतद् द्रष्टव्यम्, पृ० २२१।

## तन्त्राणां शाखाभेदाः

**गारुडे भूततन्त्रे च वाग्विधानेषु सर्वतः ।**
**यामले चैकवीरे च नवके त्रिकभेदतः ॥**

**समभेदे च देव्याख्ये दुर्गाख्ये विन्ध्यवासिनि ।**
**चण्डिकाख्ये चतुष्के च स्वयंभूत्ये महेश्वरे ॥**

**ऋक्प्रतिष्ठितरूपे वा ऋषिमानुषयोजिते ।**
**आयुधे विविधे चैव विद्यापीठेषु सर्वतः ॥**

**सर्वपातालतन्त्रेषु नागेषु द्रामिडेषु च ॥**

इत्येवं प्रकारेण नेत्रतन्त्रे भेदा वर्णिताः सन्ति[१] ।

तदीयोद्द्योतव्याख्यायाम्—यामल इति ब्रह्मयामल-रुद्रयामलादौ, एकवीर इति परात्रिंशिका-मतत्रिंशिकादौ, नवक इति नवात्मचक्रादौ, त्रिक इति षडर्धनयेषु, समभेदे चेति समविषमाख्येषु मतनयेषु, देव्याख्ये इति महाघोराजयादिभेदेषु, विन्ध्यवासिनीत्येतदाख्यदेवताप्रतिपादके, चण्डिकाद्ये चतुष्के इति दक्षिणवामस्रोतसि तत्तद्देवताचतुष्टयाराधनप्रतिपादिनि इत्येवं विशदीकृतम् ।

अजितागमभूमिकायामुद्धृतपूर्वकारणागमे तु शैवतन्त्रस्य चातुर्विध्यं प्रदर्शितम्, तथा हि—

**शैवं चतुर्विधं ज्ञेयं शैवं पाशुपतं तथा ।**
**सोमं लाकुलमित्येते चतुर्भेदाः प्रकीर्तिताः ॥**

पुनश्च तत्रैव भूमिकायामुद्धृते कामिकागमे गारुड-भैरव-कापाल-पाञ्चरात्र-लाकुल-पाशुपत-बौद्ध-जैनप्रभृतिभेदा वर्णिताः । तथा च—

**गारुडं भूततन्त्रं च भैरवं वामतन्त्रकम् ।**
**कापालं पाञ्चरात्रं च लाकुली कुशशास्त्रकम्**[२] ॥ इत्यादि ।

पुनश्च अजितागमे क्रियापादे भैरव-पाशुपत-भूततन्त्र-विष्णुतन्त्रादिभेदानामुल्लेखो वर्तते । तथा हि—

**सिद्धान्ते भूततन्त्रे च वामे स्रोतसि दक्षिणे ।**
**भैरवे च तथान्येषु पशुपाशुपतादिषु ॥**
**विष्णुतन्त्रे च बौद्धे च तथा दिक्पालदर्शने**[३] ॥

१. ने० त० १३।३८-४२ ;   २. कामिकागमे—१।११४-११६ ।
३. अजितागमे — ३।२२-२३ ।

कुलार्णवे तु मन्त्राणां बहुविधा भेदा निरूपिताः सन्ति । तथा च—

**शैव-वैष्णव-दौर्गार्कगाणपत्येन्दुसम्भवैः ।**
**मन्त्रैर्विशुद्धचित्तस्य कुलज्ञानं प्रकाशते[1] ॥**

### तन्त्राणामुत्तमाधमभावविमर्शः

परात्रिंशिकाव्याख्यायामुद्धृतवचनेन तन्त्राणामुत्तराधरभावो द्रष्टव्यः । तथा च—

**वेदाच्छैवं ततो वामं ततो दक्षं ततः कुलम् ।**
**ततो मतं ततश्चापि त्रिकं सर्वोत्तमं परम्[2] ॥**

पुनश्च तत्रैवोद्धृतनिशाचरवचनेनापि स भावः प्रदर्शितः । तथा च—

**वाममार्गाभिषिक्तोऽपि देशिकः परतत्त्ववित् ।**
**संस्कार्यो भैरवे सोऽपि कुले कौले त्रिकेऽपि सः[3] ॥**

कुलार्णवतन्त्रोक्तप्रमाणेनाऽपि पूर्वोक्तभावस्य स्फुटाभिव्यक्तिः प्रदर्शिताऽस्ति । तथा च—

**सर्वेभ्यश्चोत्तमा वेदा वेदेभ्यो वैष्णवं परम् ।**
**वैष्णवादुत्तमं शैवं शैवाद् दक्षिणमुत्तमम् ॥**
**दक्षिणादुत्तमं वामं वामात् सिद्धान्तमुत्तमम् ।**
**सिद्धान्तादुत्तमं कौलं कौलात् परतरं न हि[4] ॥**

### मन्त्रस्वरूपविमर्शः

तन्त्रशास्त्रे मनुशब्दोऽपि मन्त्रपर्यायतया प्रयुज्यते[5] । स्त्रीदेवत्याश्च मन्त्रा विद्यापदेन प्रोच्यन्ते ।

मननत्राणधर्माणश्चिन्माहात्म्यावमर्शका मन्त्रा भवन्ति । 'मननात् त्रायत इति मन्त्रः' इति व्युत्पत्तिरपि निगूढमर्थं बोधयति । 'मत्रि' गुप्तभाषणे इति चौरादिकाद् धातोर्भावे घञ्प्रत्यये कृते सति 'मन्त्रणं मन्त्रः, गुप्तभाषणमित्यपि' इति व्युत्पत्तिलभ्योऽर्थः सम्मान्यते । अत एव गुप्तार्थभाजः पिण्डबीजरूपाः पुरुषवाच्यध्यासिताश्च मन्त्रा भवन्तीत्यपि वर्तते उद्घोषः । त एव मन्त्राः संवेद्यमानस्फुटार्थरूपा मालामन्त्राः स्त्रीरूपवाच्यध्यासिताश्च सन्तो विद्यापदाभिधेया भवन्ति । मन्त्रा आणव-शाक्त-शाम्भवोपायसम्बन्धिन इत्यपि केचित् । मृत्युञ्जयभट्टारकेण तु संसाराद् मोचकत्वं परे शिवे संयोजकत्वं च मन्त्राणां स्वभाव उक्तः । तथा च—

---

१. कुलार्णवे—२।२९; २. परा० उ०, पृ० ९२; ३. तत्रैव, पृ० ९२ ।
४. कुला० २।७-८; ५. रुद्रयामले—२।११ ।

मोचयन्ति च संसाराद् योजयन्ति परे शिवे ।
मननत्राणधर्मित्वात् तेन मन्त्रा इति स्मृताः[1] ॥

नेत्रतन्त्रेऽप्ययं विषयः सम्यक् प्रपञ्चितोऽस्ति[2] ।

## भावादिहीनमन्त्राणां सिद्धिप्रदत्वाभावः

भाव–ध्यान–निराहार–नित्यस्नान–जितेन्द्रियत्व–शान्तनिगूढार्थवेतृत्वप्रभृति-धर्महीना मन्त्रजन्यसिद्धिषु अक्षमा भवन्ति । तथा चोक्तं रुद्रयामले—

मन्दभाग्यः पशोर्योनिं प्राप्नोति मां विहाय सः ।
मयि भावं यः करोति दुर्लभो जनवल्लभः ॥

भावेन लभ्यते सर्वं भावेन देवदर्शनम् ।
भावेन परमं ज्ञानं तस्माद् भावावलम्बनम् ॥

भावं च सर्वशास्त्राणां गूढं सर्वेन्द्रियस्थितम् ।
सर्वेषां मूलभूतं च देवीभावं यदा लभेत् ॥

तदेव सर्वसिद्धिश्च तदा ध्यानदृढो भवेत् ।
अकलङ्को निराहारी निवासधृतमानसः ॥

नित्यस्नानाभिपूजाङ्गो भावी भावं यदा लभेत् ।
क्रियादक्षो महाशिक्षानिपुणोऽपि जितेन्द्रियः ॥

सर्वशास्त्रनिगूढार्थवेत्ता न्यासविवर्जितः ।
तेषां हस्तगतं भावं वद भावं यथा तनौ[3] ॥

नेत्रतन्त्रेऽप्ययं विषयो विस्तरेण प्रकाशितोऽस्ति । तथा हि—

भावहीनास्तु ये मन्त्राः शक्तिहीनास्तु कीलिताः ।
वर्णमात्रादिहीनास्तु गुर्वागमविवर्जिताः ॥

भ्रष्टाम्नायविहीना ये आगमोज्झितविघ्निताः ।
न सिद्ध्यन्ति यदा देवि जप्ता इष्टाः सहस्रशः ॥

असिद्धा रिपवो ये च सर्वांशकविवर्जिताः ।
आद्यन्तसम्पुटेनैव साध्यवर्णेन तु रोधिताः[4] ॥

---

१. मृत्युञ्जय० २१।७५-७६; २. नेत्रतन्त्रे मृत्युञ्जयभट्टारके—२१।११ ।

३. रुद्रयामले—१।११२-११७; ४. नेत्रतन्त्रे—८।५९-६२ ।

अस्मिन् रुद्रयामले भावस्य त्रैविध्यं दर्शितमस्ति । तथा हि—

**पशुभावं महाभावं भावानां सिद्धिदं पुनः ।**
**आदौ भावं पशोः कृत्वा पश्चात् कुर्यादवश्यकम् ॥**
**वीरभावं महाभावं सर्वभावोत्तमोत्तमम् ॥**
**तत्पश्चादतिसौन्दर्यं दिव्यभावं महाफलम् ।**
**फलाकाङ्क्षी मोक्षगश्च सर्वभूतहिते रतः[1] ॥**

## भावत्रयस्य फलविमर्शः

एतस्य भावत्रयस्य फलत्रयमपि तत्रैव क्रमेण वर्णितं वर्तते । तद्यथा—

**विद्याकाङ्क्षी धनाकाङ्क्षी रत्नाकाङ्क्षी च यो नरः ।**
**कुर्याद् भावत्रयं दिव्यं भावसाधनमुत्तमम् ॥**
**भावेन लभते वाद्यं ( विद्यां ) धनं रत्नं महाफलम् ।**
**कोटिगोदानजैः पुण्यैः कोटिशालग्रामदानजैः ॥**
**वाराणस्यां कोटिलिङ्गपूजनेन च यत्फलम् ।**
**तत्फलं लभते मर्त्यः क्षणादेव न संशयः[2] ॥**

## मन्त्रेषु दशधा दोषोत्पादनम्

कीलनेन भेदनेन मौनेन जम्भनेन स्तम्भनेन प्रत्यङ्गिरत्वेन सन्त्रासेन ताडनेन रिपुत्वकरणेन सर्वहानिविधानेन—एभिर्दशसंख्याकैः प्रकारैर्मन्त्राणां सामर्थ्यं क्षीयते । अतः सुगुप्ते स्थाने जपहोमादिकं विधातव्यम् । उक्तं च—

**कीलनं चैव मन्त्राणां भेदनं मोहनं तथा ।**
**सन्त्रासं ताडनं चैव जम्भनं स्तम्भनं तथा ॥**
**रिपुत्वकरणं चान्यत् प्रत्यङ्गिरत्वमेव हि ।**
**सर्वहानिविधायित्वं क्रियते दुर्मन्त्रिभिः ॥**
**एवं दशप्रकारेण प्रवर्तन्ते हि हिंसकाः[3] ॥**

## नवविधं मन्त्रदोषनिवारणम्

मन्त्राणामुक्तदोषाणामपनयनाय नव प्रकाराः शास्त्रे प्रोक्ताः । ते च—

**दीपनं भेदनं चैव तापनं चाभिषेचनम् ।**
**विमलीकरणं चैव तथेन्धननिवेशनम् ॥**

---

१. रुद्रयामले—६।५१-५३; २. तत्रैव—६।५५-५६; ३ नेत्रतन्त्रे—६।३३ ।

**सन्तर्पणं गुप्तिभाव आप्यायो नवमस्तथा ।**
**एवं नवप्रकारेण मन्त्रवादमशेषतः ॥**
**यो जानाति स जानाति मन्त्रसाधनमुत्तमम्[१] ॥**

अयं भावः — दीपनं मन्त्रस्य प्रणवेन । बोधनं नमःशब्देन । ताडनं फट्कारेण । अभिषेचनं वौषट्कारेण । विमलीकरणं स्वाहाशब्देन । इन्धननिवेशनं दाह्यपाशविषादिदहने विनियोजनम्, तच्च हुंकारेण सम्पुटीकरणम् । तर्पणं बलवत्तासाधनम्, तच्च प्रतिवर्णं लांकारेण सम्पुटीकरणम् । गुप्तिभावो रक्षणम्, तच्च नेत्रनाथसम्पुटीकृतस्य अयुतजपाद् भवति । आप्यायनं पुनर्जातबलस्य पुष्ट्याधानम्, तच्च वांकारेण प्रतिवर्णं सम्पुटीकरणम् । एते नवविधाः प्रकारा मन्त्रदोषनिवारकत्वेन शास्त्रे प्रोक्ताः साधकैर्ज्ञातव्याः ।

अत्र शारदातिलके विशिष्टा विषयाः संक्षिप्य निरूप्यन्ते ।

**प्रथमपटले**—शब्दब्रह्मस्वरूपम्, शिवस्य निर्गुणत्वं सगुणत्वं च । तथा हि—

**निर्गुणः सगुणश्चेति शिवो ज्ञेयः सनातनः ।**
**निर्गुणः प्रकृतेरन्यः सगुणः सकलः स्मृतः ॥**

प्रयोगसारेऽप्येतदुक्तमस्ति—

**नित्यः सर्वगतः सूक्ष्मः सदानन्दो निरामयः ।**
**विकाररहितः साक्षी शिवो ज्ञेयः सनातनः ॥**

नारायणीयेऽपि एतदुक्तं द्रष्टव्यम्—

**निष्क्रियं निर्गुणं शान्तमानन्दमजमव्ययम् ।**
**अजरामरमव्यक्तमज्ञेयमचलं ध्रुवम् ॥**
**ज्ञानात्मकं परं ब्रह्म स्वसंवेद्यं हृदि स्थितम् ।**
**सत्यं बुद्धेः परं नित्यं निर्मलं निष्कलं स्मृतम् ॥**

## शक्ति-नाद-बिन्दूनां समुद्भवप्रकारः

**सच्चिदानन्दविभवात् सकलात् परमेश्वरात् ।**
**आसीच्छक्तिस्ततो नादो नादाद् बिन्दुसमुद्भवः[२] ॥**

---

१. नेत्रतन्त्रे ६।१७-१८ ।

२. शारदातिलके प्रथमपटले, पृ० ७-१४ ।

ज्ञानेच्छाक्रियाभेदेन शक्तयस्तिस्रो वर्णिताः सन्ति[१]। अष्टपीठानि[२], गायत्री-भेदाः[३], परा-पश्यन्ती-मध्यमानां स्वरूपं च[४] सुष्ठु निरूपितमस्ति।

**द्वितीये पटले—स्वर-स्पर्शयोः** स्वरूपम् उक्तम्, तत्र स्वराणां संख्या षोडश इति,[५] स्पर्शानां पञ्चविंशतित्वम्, स्वरमन्तरा स्पर्शानामभिव्यक्तिर्न भवति[६]। पञ्चाशद्-वर्णगानां कलानां निरूपणम्[७]। रक्तवर्णानां रुद्राणां निरूपणम्[८]। स्वरशक्तीनां विचारः[९]। दामोदर-वासुदेव-सङ्कर्षण-प्रद्युम्न-अनिरुद्धप्रभृतयः स्वराणां मूर्तिरूपतया वर्णिताः सन्ति[१०]। पुं-स्त्री-नपुंसकभेदेन मन्त्राणां भेदा द्रष्टव्याः[११]। शक्तिहीन-मन्त्राणां लक्षणानि[१२]। मन्त्राणां जपस्य विधिविचारः[१३]। मन्त्रस्य संस्कारपद्धतिः, अभिषेकस्तर्पणं च।

**अश्वत्थपल्लवैर्मन्त्रमभिषिञ्चेद् विशुद्धये।**
**सञ्चिन्त्य मनसा मन्त्रं ज्योतिर्मन्त्रेण निर्दहेत्॥**
**मन्त्रे मलत्रयं मन्त्री विमलीकरणं त्विदम्[१४]॥**

## एतद्ग्रन्थोक्तानि गुरुलक्षणानि

**मातृतः पितृतः शुद्धः शुद्धभावो जितेन्द्रियः।**
**सर्वागमानां सारज्ञः सर्वशास्त्रार्थतत्त्ववित्॥**
**योगमार्गानुसन्धायी देवताहृदयङ्गमः।**
**इत्यादिगुणसम्पन्नो गुरुरागमसम्मतः[१५]॥**

## शिष्यस्य लक्षणम्

**शिष्यः कुलीनः शुद्धात्मा पुरुषार्थपरायणः।**
**अधीतवेदः कुशलो दूरमुक्तमनोभवः॥**
**आज्ञाकारी गुरोः शिष्यो मनोवाक्कायकर्मभिः।**
**त्रिकालं यो नमस्कुर्यादागमाचारतत्त्ववित्॥**
**एतादृशगुणोपेतः शिष्यो भवति नापरः[१६]॥**

---

१. शा० ति० प्रथमपटले, पृ० १५; २. तत्रैव, पृ० ८७।
३. तत्रैव, पृ० १००; ४. तत्रैव, पृ० ११२।
५. तत्रैव, द्वितीयपटले, पृ० १-८; ६. तत्रैव, पृ० ८; ७. तत्रैव, पृ० १७-२७।
८. तत्रैव, पृ० ३४-३५; ९. तत्रैव, पृ० ३६-३८।
१०. तत्रैव, पृ० ४५-५०; ११. तत्रैव, पृ० ५७; १२. तत्रैव—२।७२-११०।
१३. तत्रैव—२।११४-१२०; १४. तत्रैव—२।११८-११९।
१५. तत्रैव—२।१४२-१४४; १६. तत्रैव—२।१४५-१५३।

**तृतीये पटले**—वास्तुयागपुरस्सरं दीक्षाविधौ स्थानकालादीनां विचारः कृतो वर्तते। तथा हि—

**नक्षत्रराशिवाराणामनुकूले शुभेऽहनि।**
**ततो भूमितले शुद्धे तुषाङ्गारविवर्जिते॥ १९।**

**पुण्याहं वाचयित्वा तु मण्डपं रचयेच्छुभम्।**
**पञ्चभिः सप्तभिर्हस्तैर्नवभिर्वामितान्तरम्॥ २०।**

**आशीर्वाग्भिर्द्विजातीनां मङ्गलाचारपूर्वकम्।**
**निर्वपेत्तेषु पात्रेषु देशिको यतमानसः॥ ३९।**

अथ च दीक्षाग्रहणे नववेश्मप्रवेशने अभिषेकादिकर्मणि च अङ्कुरार्पणमावश्यकम्। अङ्कुरस्य शुभाशुभत्वपरीक्षा सिद्धान्तशेखरादिग्रन्थोक्तपद्धत्या करणीया इति च पदार्थादर्शव्याख्यायां द्रष्टव्यम्। तथा च—

**दीक्षायामभिषेकेषु नववेश्मप्रवेशने।**
**उत्सवेषु च सम्पत्त्यै विदध्यादङ्कुरार्पणम्॥ ४६-४७।**

कुण्डस्य मण्डपादीनां च समीचीनं लक्षणं निर्माणविधिश्च प्रदर्शितमस्ति।

**दीक्षायां देवपूजार्थं मण्डलानां चतुष्टयम्।**
**सर्वतन्त्रानुसारेण प्रोक्तं सर्वसमृद्धिदम्॥ १४०।**

**चतुर्थे पटले**—मण्डलकथनानन्तरं दीक्षाविधानव्यवस्था प्रोच्यते चतुर्थे पटले। दीक्षाशब्दार्थो दीक्षाभेदाश्च प्रोक्ताः सन्ति। तथा हि—

**दिव्यं ज्ञानं यतो दद्यात् कुर्यात् पापस्य संक्षयः।**
**तस्माद् दीक्षेति सम्प्रोक्ता देशिकैस्तन्त्रवेदिभिः॥ २।**

**चतुर्विधा सा सन्दिष्टा क्रियावत्याविभेदतः।**
**क्रियावती वर्णमयी कलात्मा वेधमय्यपि॥ ३।**

पदार्थादर्शव्याख्यायामपि प्रोक्तं प्रयोगसारोक्तं पद्यमुद्दिश्य—

**दीयते ज्ञानसद्भावः क्षीयते पापसञ्चयः।**
**तेन दीक्षेति सा ज्ञेया पाशच्छेदक्षयात् क्रिया॥** इति।

नित्यकृत्यविधिरपि तत्रैव टीकायामुक्तोऽस्ति[१]। अत्र पटलेऽङ्गन्यास-करन्यास-प्राणायामादिविधिर्विस्तरेण वर्णितः।

---

१. शा० ति०, पदार्थादर्शव्याख्यायाम्, पृ० १६१।

**पञ्चमे पटले**—विधिवत्संस्कृते कुण्डे तन्त्रशास्त्रानुसारम् अग्निजननं प्रोक्तम् । कुण्डानां चाष्टादशसंस्काराश्चोक्ताः[१] । वागीश्वरेण संयुक्ताया वागीश्वर्य्याः पूजनम्[२], हवनविधिः, पूर्णाहुतिविधानं च प्रोक्तमस्ति[३] । देशिकोत्तमेन दिव्यदृष्टया शिष्यावलोकनम्[४], चतुर्विधाया दीक्षाया अत्र पटले निरूपणञ्च कृतमस्ति[५] ।

**षष्ठे पटले**—दीक्षाकथनानन्तरं मन्त्रा वक्तव्याः । अतस्तेषां प्रकृतिभूतां मातृकां वक्तुमुपक्रमतेऽत्र षष्ठे पटले । वाग्देवतास्वरूपमप्यत्रोक्तम् । तथा हि

**मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजै-**
**बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये[६] ॥**

अक्षरन्यासस्थानानि प्रोक्तानि[७], वाग्देवताया नव शक्तयश्च निरूपिताः । तथा च—

**मेधा प्रज्ञा प्रभा विद्या श्रीर्धृतिस्मृतिबुद्धयः ।**
**विद्येश्वरीति सम्प्रोक्ता भारत्या नव शक्तयः[८] ॥**

वागीश्वर्य्याः पूजोपचारवर्णनम्[९], मातृकान्यासस्तत्र ऋषिच्छन्दोदेवतानां निरूपणञ्च । तथा च—

**शक्तिपूर्वां तनौ न्यस्येन्मातृकां मन्त्रवित्तमः ।**
**ऋषिः शक्तिः स्मृतं छन्दो गायत्रं देवता बुधैः ॥**
**सम्प्रोक्ता विश्वजननी सर्वसौभाग्यदायिनी[१०] ॥**

एवमेव अपरासामपि मातृकाणां पूजनप्रकाराः प्रोक्ताः, तत्फलं चापि निरूपितम् । तथा हि—

**अभिषिञ्चेद् विलोमेन साध्यं तं दत्तदक्षिणम् ।**
**सर्वपापक्षयकरं शुभदं शान्तिसिद्धिदम् ॥**

**कृत्याद्रोहादिशमनं सौभाग्यश्रीजयप्रदम् ।**
**पुत्रप्रदं च वन्ध्यानामभिषेकमिमं विदुः ॥**

**ज्वरार्त्तस्य पुरः स्थित्वा जपेत् साग्रं सहस्रकम् ।**
**ज्वरो नश्यति तस्याशु क्षुद्रभूतग्रहा अपि ॥**

---

१. शा० ति०—५।१-७ । २. तत्रैव—५।१०-११ ।
३. तत्रैव—५।९८; ४. तत्रैव—५।९७; ५. तत्रैव—५।१४१ ।
६. तत्रैव ६।४; ७. तत्रैव – ६।५-७; ८. तत्रैव—६।११ ।
९. तत्रैव—६।१२-१५; १०. तत्रैव—६।४५-४६ ।

**परतेजसि सञ्चिन्त्य शुभ्रं स्रुतसुधामयम् ।
विधुं विद्यां जपेद्योगो विषरोगविनाशकृत् ॥**

**वलीपलितरोगघ्नः क्षुत्पिपासाप्रणाशनः ।
पुष्टिदः सर्वसौभाग्यदायी लक्ष्मीशुभप्रदः[1] ॥**

**सप्तमे पटले**—अत्र मातृकाविशेषस्य भूतलिपिमन्त्रस्य विशदं निरूपणमस्ति । तथा हि—

**अथ भूतलिपिं वक्ष्ये सुगोप्यमतिदुर्लभम् ।
यां प्राप्य शम्भोर्मुनयः सर्वान् कामान् प्रपेदिरे ॥**

**पञ्च ह्रस्वाः सन्धिवर्णा व्योमेराग्निर्जलन्धरा ।
अन्त्यमाद्यं द्वितीयं च चतुर्थं मध्यमं क्रमात् ॥**

**पञ्च वर्गाक्षराणि स्युर्वान्तश्वेतेन्दुभिः सह ।
एषा भूतलिपिः प्रोक्ता द्विचत्वारिंशदक्षरैः[2] ॥**

मन्त्रोद्धारः प्रोच्यते-**पञ्चेति** । पञ्च ह्रस्वाः । अ इ उ ऋ ऌ—प्रथमो वर्गः । सन्धिवर्णाः ए ऐ ओ औ–द्वितीयः । व्योम ( आकाशः ) हः । ईरो यः ( ईरो वायुः ) । अग्नी रः । जलं वः । धरा लः । अयं तृतीयः । पञ्च वर्गाक्षराणां क्रम उक्तः —**अन्त्यमिति** । अन्त्यं ङः, आद्यं कः । द्वितीयं खः । चतुर्थं घः । मध्यमं गः । अयं क्रमोऽग्रेऽपि चतुर्षु बोध्यः । एवं वर्गाष्टकम्[3] ।

दीक्षितकर्तृकन्यास-जपादिसंख्यानिरूपणम्—

**आगमोक्तेन मार्गेण दीक्षितः साधकोत्तमः ।
लक्षं न्यसेज्जपेत्तावदयुतं जुहुयात्तिलैः ॥**

**पूजयेदन्वहं देवीं पीठे प्रागीरिते सुधीः ।
वर्णाब्जेनासनं दद्यान्मूर्तिं मूलेन कल्पयेत्[4] ॥**

अयमाशयः — अष्टदलं भूपुरं चतुर्द्वारं च कृत्वा तत्र पूर्वोक्ताः पीठशक्तीः सम्पूज्य वर्णाब्जेनासनं दत्त्वा मूर्तिं मूलेन सङ्कल्प्य तत्र देवीमभ्यर्च्य केसरेषु यथापूर्वमङ्गानि चाभ्यर्च्य तदुपरि दिग्दलेषु चतस्रोऽम्बिकाद्याः, तदग्रे ब्राह्म्याद्याः, षोडशदलादिषु कराल्याद्याः पूजयेत् । वर्णाब्जेनेति—"ह् सौः वर्णाब्जाय भूतलिपियोगपीठाय नमः" इति आसनदानम्[5] ।

---

१. शा० ति० ६।९९-१०३;   २. तत्रैव—७।१-३ ।
३. तत्रैव, पदार्थादर्शे, पृ० २७१ ;   ४. तत्रैव—७।२२-२३ ।
५. तत्रैव, पदार्थादर्शे, पृ० २७४ ।

अम्बिका-वाग्भवी-दुर्गा-ब्राह्मीप्रभृतयो द्वात्रिंशच्छक्तयः, अपराश्च पिङ्गलाक्षी-विशालाक्षी-श्रद्धा-स्वाहाप्रभृतयो मातृशक्तयः प्रयत्नतः शास्त्रीयोपचारेण सम्पूज्याः[१] । मन्त्रसाधने वर्जनीयाः पदार्थाः । तथा हि—

**आम्रातं गृञ्जनं बिल्वं कलञ्जं लशुनं तथा ।**
**तैलं पलाण्डुं पिण्याकं शाङ्गष्टमपि भोजने ॥**
**क्रोधं निष्ठीवनं तद्वन्नीचाङ्गस्पर्शनं तथा ।**
**मनुष्य-सर्प-मार्जार-मण्डूक-नकुलादयः ।**
**अन्तरा यदि गच्छेयुस्तदा व्याख्यां परित्यजेत्[२]॥**

अत्राभिप्रायः स्पष्ट एव ।

**अष्टमे पटले**—ब्रह्मशक्तिवाचकान् सरस्वतीमन्त्रानुक्त्वा विष्णुशक्तिवाचकान्-लक्ष्मीमन्त्रान् वक्तुमुपक्रमो विधीयते—

**वान्तं वह्निसमारूढं वामनेत्रेन्दुसंयुतम् ।**
**बीजमेतत् श्रियः प्रोक्तं चिन्तामणिरिवापरः ॥**
**ऋषिर्भृगुर्निवृच्छन्दो देवता श्रीः समीरिता ।**
**षड्दीर्घयुक्तबीजेन कुर्यादङ्गानि षट् क्रमात्[३] ॥**

मन्त्रोद्धारप्रकारस्य विशदीकरणं पदार्थादर्शव्याख्यायाम्—

वान्तं शः । वह्नी रेफः । वामनेत्रम् ईकारः । इन्दुः बिन्दुः । चिन्तामणिरिव इत्यनेनैतदुक्तं भवति । प्रणवादित्वं वा, वागादित्वं वा, कामादित्वं वा । तद्योगे तत्तद्देवतानामुपसर्जनत्वं च । यथा प्रणवादित्वे परमात्मस्वरूपिणी श्रीर्देवता । एवं शक्त्यादित्वे शक्तिस्वरूपिणी श्रीर्देवता इत्यादि । शकारो बीजम् । ईकारः शक्तिः[४] ।

महालक्ष्मीमन्त्रजपस्य विधिः, तदीयहवने कीदृशी समिधा, कीदृशं हवनीयं द्रव्यम्, हवनीयं फलं च कीदृशमेतत् सर्वं निरूपितमस्ति । तथा हि—

**त्रिलक्षं प्रजपेन्मन्त्रं वाञ्छितं लभते धनम् ।**
**अशोकवह्नौ जुहुयात्तण्डुलैराज्यलोलितैः ॥**
**वशयत्यचिरादेव त्रैलोक्यमपि मन्त्रवित् ।**
**जुहुयात् खादिरे वह्नौ तण्डुलैर्मधुरोक्षितैः ॥**
**राजा वश्यो भवेच्छीघ्रं महालक्ष्मीश्च वर्धते[५] ॥**

---

१. शा० ति० ७।२८-४४; २. तत्रैव—७।११८-१२५ ।
३. तत्रैव—८।२-३; ४. तत्रैव, पदार्थादर्शे, पृ० २९१ ।
५. तत्रैव—८।२३-२६ ।

एवमेव बिल्वफलेन हवनस्य फलमुक्तं महालक्ष्म्याश्चक्षुषा दर्शनम् । अशोकवल्ली इत्यस्य अशोककाष्ठसमिद्धेऽग्नावित्यर्थः[1] । नानापदार्थैः समलङ्कृतस्य सुमनोहरमण्डपस्य मनसा ध्यानं कृत्वा तन्मध्ये पारिजातवृक्षस्य कल्पना कार्या, तस्याधस्तात् सुमनोहरस्य सिंहासनस्य कल्पना, तत्र स्थित्वा महालक्ष्मीं ध्यायेत्[2] । शास्त्रीये मण्डपे हवनम्, तत्र कलशे बहुविधरत्नादिद्रव्यप्रक्षेपः, तदीयजलेन यजमानस्याभिषेकः। तदभिषेकप्रभावेण वन्ध्याऽपि पुत्रं लभते, महारोगिणो रोगनिवारणं भवति, एवंविधानि बहूनि विशिष्टफलानि प्रोक्तानि[3] ।

भूयस्याः श्रिय आकाङ्क्षायां विष्णुभक्तः साधकः सत्यवादी भवेत् । पश्चिमाभिमुखोऽश्नीयात्, सत्यं प्रियं वदेत्, स्नानादिना शुचिर्भवेत्, मलिनो न भवेत्, कुत्सितान्नं न भुञ्जीत, एवं बहुविधा आचारा निर्दिष्टाः, तेऽवश्यं पालनीयाः[4] ।

**नवमे पटले**—भगवत्या भुवनेश्वर्य्या उपासनापद्धतिरुपन्यस्ताऽस्ति । अत्र द्वितीये पक्षे मन्त्रोद्धारविधिर्निरूपितोऽस्ति । तथा हि—

**लकुलीशोऽग्निमारूढो वामनेत्रार्द्धचन्द्रवान् ।**
**बीजं तस्याः समाख्यातं सेवितं सिद्धिकाङ्क्षिभिः ॥**

**ऋषिः शक्तिर्भवेच्छन्दो गायत्री देवता मनोः ।**
**कथिता सुरसंघेन सेविता भुवनेश्वरी[5] ॥**

मन्त्रोद्धारविधिरुक्तोऽस्ति पदार्थादर्शव्याख्यायाम्—

**लकुलीश इति** । लकुलीशो हः । अग्नी रः । वामनेत्रम् ई । अर्द्धचन्द्रो बिन्दुः । एवञ्च मिलित्वा बीजमेकम् । सिद्धिकाङ्क्षिभिः सेवितमिति । अनेनास्य केवलस्यापि सकलपुरुषार्थसाधनता सूचिता । तथा च भुवनेश्वरीपारिजाते—

**मत्समः पुरुषो नास्ति त्वत्समा नास्ति चाङ्गना ।**
**मायाबीजसमो मन्त्रो न भूतो न भविष्यति ॥**

भगवत्या भुवनेश्वर्य्या ध्यानमुक्तम्—

**उद्यदिनद्युतिमिन्दुकिरीटां तुङ्गकुचां नयनत्रययुक्ताम् ।**
**स्मेरमुखीं वरदाङ्कुशपाशाभीतिकरां प्रभजे भुवनेशीम्[6] ॥**

---

१. शा० ति० पदार्थादर्शे, पृ० २९५ ; २. तत्रैव—८।६६-७३ ।
३. तत्रैव—८।११३-१४०; ४. तत्रैव—८।१६१-१६७ ।
५. तत्रैव—९।२-३; ६. तत्रैव—९।१४ ।

अत्र पदार्थादर्शव्याख्या—इनः सूर्यः। रक्तपद्मस्थामित्यपि। आयुधध्यानम्—वामाधो हस्ते वरम्, दक्षिणोर्ध्वेऽङ्कुशम्, वामोर्ध्वे पाशम्, दक्षाधोऽभयमिति सम्प्रदायविदः। तदुक्तं महासम्मोहने—

**दक्षिणे चाङ्कुशं दद्याद् वामे पाशं प्रदापयेत्।**
**वरदं वामतो दद्यादभयं दक्षिणे करे॥** इति।

अस्मिन् पटले पुत्तलीपूजनम्[1], भैरवपूजनम्[2], शास्त्रोक्तविधिना यन्त्रनिर्माणम्[3], नानाविधद्रव्यैर्हवनविधानम्, शिरस्त्राणे यन्त्रं विलिख्य रणे गमनं करणीयम्, विजयस्तत्फलं ध्रुवं निगदितमस्ति[4]।

भूर्जपत्रे यन्त्रविलेखनेन सर्ववश्यकरत्वमारोग्यं शत्रुपराजयश्च[5]।

**दशमे पटले**—भुवनेश्वरीमन्त्रप्रकथनानन्तरं त्वरितं फलदायिनीं त्वरितामित्यादिमन्त्रान् वक्तुमुपक्रमते—**तत इति**। तथा चोक्तम्—

**भक्तियुतानां त्वरया सिद्धिकरो चेति मन्त्रिणां सततम्।**
**देव्यास्त्वरिताख्या स्यात्त्वरितं क्ष्वेलग्रहाविहरणतया[6]॥** इति॥

मन्त्रोद्धारविधिरुक्तः पदार्थादर्शव्याख्यायाम्। तत्र मूलस्थः श्लोकः—

**तारो माया वर्म बीजमृद्धिरीशस्वरान्विता।**
**कूर्मस्तदन्त्यो भगवान् क्षस्त्रीदीर्घंतनुच्छवम्॥**
**सवंतो भगवान् माया फडन्तो द्वादशाक्षरः[7]॥**

**तार इति**। तारः प्रणवः। माया शक्तिबीजम्, वर्मबीजं हुम्। ऋद्धिः कलान्यासे खः। ईशस्वर एकादशस्वरः। एतेनान्वितः। तेन खे। कूर्मश्चकारस्तदन्तः छः। भगवानेकारयुक्तस्तेन छे। क्षः स्त्रीस्वरूपम्। अत्र क्षकारः सविसर्गो ज्ञेयः। साठन्तमालयमित्युक्तेः। दीर्घं तनुच्छदं हूम्। संवर्तः क्षः, भगवानेकारयुक्तः। तेन क्षे। अस्याश्च देव्याः शापोऽस्तीति प्रसिद्धिः। केचन क्षे इति वर्णं कीलकं मन्यन्ते, तदर्थं च क्षेकारं पूर्वमुच्चार्य हुङ्कारमुच्चारयन्ति। दक्षिणामूर्तिसंहितायां तु—"कवचं स्त्रीमिमे बीजकीलके तु प्रकीर्तिते" इति। केचन पूर्वं हुङ्कारं पश्चात् क्षेकारमिति महती आचार्याणां विप्रतिपत्तिस्तत्र यथा वृक्षादीनां क्वचिद् ग्रन्थयो भवन्ति,

---

१. शा० ति० ९।४७-४८; २. तत्रैव—९।७५-७६।
३. तत्रैव—९।१०६-१०७; ४. तत्रैव—९।१०९-११०।
५. तत्रैव—९।१११; ६. तत्रैव, पदार्थादर्शे, पृ० ३३५।
७. तत्रैव—१०।१-२।

तथैव मन्त्राणामपि स्वभावादेव कीलाख्याद् ग्रन्थयो भवन्ति। तेन कालविलम्बा-सिद्ध्यादयो दोषा भवन्ति। स चाक्षरविशेषण एव जायते। तत्र केषुचिन्मन्त्रेषु तदक्षर-मुद्धृत्य शास्त्रीयेण केनचिदक्षरेण परिपूर्य जपं कुर्वन्ति—इत्येवं बहवो विकल्पाष्टीकायां द्रष्टव्याः[१]।

केन द्रव्येण कृते होमे कीदृशं फलमिति संक्षिप्य प्रोच्यते—

**दीर्घमायुरवाप्नोति दूर्वाहोमेन साधकः।**
**धान्यैः प्रक्षालितैर्हुत्वा श्रियमिष्टां समाप्नुयात्॥**

**यवैर्धान्यसमृद्धिः स्याद् गोधूमैरिष्टसिद्धयः।**
**तण्डुलैरक्षया सिद्धिः स्याद् वृद्धिर्महती तिलैः॥**

**प्रबुद्धैः पङ्कजैर्हुत्वा वशं नयति मेदिनीम्।**
**अशोकैः पुत्रमाप्नोति मधूकैरिष्टमाप्नुयात्॥**

**पुष्पैर्वकुलसम्भूतैः कीर्तिः स्यादनपायिनी।**
**कुर्वीत सर्षपैर्होमं शत्रोर्नाशकरं सुधीः॥**
**शाल्मलीपत्रहोमेन सपत्नान् नाशयेद् ध्रुवम्[२]॥**

अन्ते च कीर्ति-श्री-कान्ति-मेधानां प्राप्तये उपायो निरूपितः, तथा हि—

**तारं शिरसि विन्यस्य देवीं सञ्चिन्त्य भारतीम्।**
**शक्तिबीजं न्यसेद् भाले संस्मृत्य भुवनेश्वरीम्॥**

**अमसौ नेत्रयोर्न्यस्येद् ध्यात्वा सूर्यं हुताशनम्।**
**मुखवृत्तेन विन्यस्येद् दान्तं चन्द्रमनुस्मरन्॥**

**जिह्वायां विन्यसेद् बीजं रमायास्तां विचिन्तयन्।**
**स्वाहार्णौ गण्डयोर्न्यस्येद् तद्गजेन्द्रधिया सुधीः॥**
**कीर्तिश्रीकान्तिमेधानां वल्लभो भवति ध्रुवम्[३]॥**

एवं बहुविधं सिद्धिकरं साधनं प्रोक्तमस्ति—

**एकादशे पटले**—पूर्वपटले दुर्गाबीजस्योक्तत्वाद् अत्र पटले दुर्गामन्त्रा वचनीया इति कृत्वा दुर्गामन्त्रस्योद्धारप्रकार उच्यते—

**ततो दुर्गामनुं वक्ष्ये दृष्टादृष्टफलप्रदम्।**
**मायाऽत्रिः कर्णबिन्द्वाढ्यो भूयोऽसौ सर्गवान् भवेत्॥**

---

१. शा० ति०, पदार्थादर्शे, पृ० ३३५;
२. तत्रैव—१०।२१-२८।
३. तत्रैव—१०।१२०-१२३।

**पञ्चान्तकः प्रतिष्ठावान् मारुतो भौतिकासनः।**
**तारादिहृंदयान्तोऽयं मन्त्रो वस्वक्षरात्मकः॥**
**ऋषिश्च नारदश्छन्दो गायत्रं देवता मनोः।**
**दुर्गा समीरिता सद्भिर्दुरितापन्निवारिणी[1]॥**

अयमाशयः—माया शक्तिबीजम्। अत्रिर्हकारः। कर्ण उकारः, बिन्दुरनुस्वारः। एतदाद्य इत्यनेन दुम्, भूयोऽसौ दुकारः। सर्गवान् विसर्गयुक्तः। अनेन एतादृशमपि बीजमिति सूचितम्। एतदर्थमेव सर्गवानित्युक्तिः। मन्त्रे तु रेफ एव। उपसर्गस्य तादृग्रूपत्वात्। पञ्चान्तको गकारः। प्रतिष्ठावानाकारयुक्तः, तेन गा इति। मारुतो यकारः। भौतिक ऐकारस्तदासनस्तेन ये। तदुक्तम्—

**तारं माया स्वबीजानि दुर्गायै हृदयान्तिके**। इति।

साम्प्रदायिका मायाबीजानन्तरं कामबीजमाहुः। दुं बीजं मायाशक्तिः। दुरितेत्यादिना विनियोगोक्तिः सूचिता[2]।

भगवतीं दुर्गां ध्यात्वा अष्टलक्षसंख्याकं मन्त्रं जपित्वा मधुरलोलितैस्तिलैः क्षैरेयेण वा हवनं कुर्यात्[3]।

ध्यानविधिस्तत्रैव सम्यक् प्रोक्तः। तथा हि—

**सिंहस्था शशिशेखरा मरकतप्रख्यैश्चतुर्भिर्भुजैः**
**शङ्खं चक्रधनुःशरांश्च दधती नेत्रैस्त्रिभिः शोभिता।**
**आमुक्ताङ्गदहारकङ्कणरणत्काञ्चीरणन्नूपुरा**
**दुर्गा दुर्गतिहारिणी भवतु वो रत्नोल्लसत्कुण्डला[4]॥**

ध्यानानन्तरमियं मुद्रा दर्शनीया—

**मुष्टिं बद्ध्वा कराभ्यां तु वासस्योपरि दक्षिणम्।**
**कृत्वा शिरसि सम्पूज्या दुर्गामुद्रेयमीरिता[5]॥**

जया-विजया-कीर्ति-प्रीति-प्रभा-श्रद्धा-मेधा-श्रुति-नामधेयधारकाष्टसंख्याकशक्तीनामपि पूजनं महते फलाय निर्दिष्टमस्ति[6]।

शत्रोरुच्चाटनम्, शत्रोर्मारणम्, शत्रुसेनायां परस्परविरोधः, शत्रुसेनापलायनम्, शत्रुसेनायां महामारीप्रकोपनम्—इत्येवंविधानि कार्याण्यत्रोक्तेन विधिना

---

१. शा० ति० ११।१-३; २. तत्रैव, पदार्थादर्शे, पृ० ३५६।
३. तत्रैव—११।५-६; ४. तत्रैव ११।५।
५. तत्रैव, पदार्थादर्शे, पृ० ३५७; ६. तत्रैव—११।११-१६।

सम्पादितेन हवनेन झटित्येव सिद्ध्यन्ति[१]। पुनश्चात्रोक्तेन विधिना सम्पादित-जप-हवन-बलिप्रदानादिभीः रक्षा विधातव्या। तत्फलं चोक्तम्—

**यत्रैवं विहिता रक्षा देशे वा नगरे पुरे।**
**ग्रामे गेहेऽथवा तत्र वर्धन्ते सम्पदः सदा॥**

**अश्मपातादयो दोषा भूतप्रेतादिसंयुताः।**
**अभिचारकृताः कृत्यारिपुचौराद्युपद्रवाः॥**
**नेक्षन्ते तां दिशं भीतास्तर्जिता देवताज्ञया[२]॥**

अतश्च एतत्पटलोक्तपद्धत्या कृता यदि देश-ग्राम-नगर-जनपदानां रक्षा, तदा तत्र भूत-प्रेत-पिशाचादीनां बाधा न भवति। आकाशात् पाषाणवृष्टिभयं दूरं गच्छति, अभिचारकृता कृत्या-रिपु-चोरादिकृता बाधा न भवति। सुख-सम्पत्तिवृद्धिर्भवति।

**द्वादशे पटले**—दुर्गाभगवत्या मन्त्रस्वरूपनिरूपणं सम्यक्त्वेन एकादशे पटले कृतम्। अथ द्वादशे पटले भैरवीमन्त्रनिरूपणं विधीयते—

**अज्ञानतिमिरध्वंसि संसारार्णवतारकम्।**
**आनन्दबीजमवतादवतक्र्यं त्रैपुरं महः॥**

**अथ वक्ष्ये परां विद्यां त्रिपुरामतिगोपिताम्।**
**यां ज्ञात्वा सिद्धसङ्घानामधिपो जायते नरः॥**

**वियद्भृगुहुताशस्थो भौतिको बिन्दुशेखरः।**
**वियत्तवादिकेन्द्राग्निस्थितं वामाक्षिबिन्दुमत्॥**

**आकाशभृगुवह्निस्थो मनुः सर्गेन्दुखण्डवान्।**
**वाग्भवं प्रथमं बीजं कामबीजं द्वितीयकम्[३]॥**

त्रिपुराशब्दव्युत्पत्तिरुक्ताऽन्यत्र—

**त्रिमूर्तिसर्गाच्च पुरा भवत्वात् त्रयीमयत्वाच्च पुरैव देव्या।**
**लये त्रिलोक्या अपि पूरणत्वात् प्रायोऽम्बिकायास्त्रिपुरेति नाम॥**

सिद्धेश्वरीमते तु—

**ब्रह्मविष्णुमहेशानैस्त्रिदेवैरर्चिता पुरा।**
**त्रिपुरेति तदा नाम कथितं दैवतैः पुरा॥** इति।

**अतिगोपितामिति**। अनेनैतदुक्तं भवति—मयाऽपि गुप्तमेव स्वरूपमुद्धृतमिति। अन्यथा 'विद्यां वक्ष्ये' इति प्रतिज्ञाय 'विद्या वेद्या' इत्युपसंहारः। अथ च मन्त्र

---

१. शा० ति० ११।९४-१०२; २. तत्रैव—११।१२२-१२४; ३. तत्रैव—१२।१-४।

उद्धृतः, इदमसङ्गतं स्यात्, **"शक्त्याद्या तु भवेद् विद्या शिवाद्यो मन्त्र उच्यते"** इत्युक्तेः । तदुक्तम्—

**एषा सा शाम्भवी विद्या गुप्ता कुलवधूरिव ।**
**कर्णात् कर्णोपदेशेन सञ्चरत्यवनीतले ॥** इति ।

मन्त्रोद्धारकरणम्—**वियदिति ।** वियद् हः, भृगुः सः, हुताशो रेफः, ते तिष्ठन्त्यत्र सः, सुपिस्थ इति बाहुलकादधिकरणे कः । भौतिक ऐ, बिन्दुरनुस्वारः । इत्याद्यं कूटम् । वियद् हः, तदादिः सः, कः स्वरूपम् । इन्द्रो लः, अग्नी रः, एते स्थिता यत्रेत्याहिताग्न्यादिः । वामाक्षि, बिन्दुरनुस्वारः । इति द्वितीयं कूटम् ।

आकाशो हः । भृगुः सः । वह्नी रेफः । मनू रौ । सर्गो विसर्गः । इन्दुखण्डः अनुस्वारः, इति तृतीयं कूटम् । आद्यन्तयो रेफः कीलकम् । तदुक्तमाचार्यैर्भैरवीस्तवे—आद्यं तृतीयमनलोजितमेव बोजं कूटं द्वितीयमनलेन विराजमानमिति । एषां प्रत्येकं नामानि **वाग्भवमिति**[1] ।

नानाविधैः पुष्पैः फलैः हवनविधानम्, तेन होमेन दोर्घायुष्यम्, आरोग्यम्, सद्यः सौन्दर्यम्, अखिलरोगनिवृत्तिः, सर्वलोकवशीकरणम्—इत्येवं फलानि निर्दिष्टानि[2] । भगवत्या नानारूपेण नानापद्यैः स्तवनम् । तथा हि—

**स्थूलां वदन्ति मुनयः श्रुतयो गृणन्ति**
**सूक्ष्मां वदन्ति वचसामधिवासमन्ये ।**
**त्वां मूलमाहुरपरे जगतां भवानि !**
**मन्यामहे वयमपारकृपाम्बुराशिम् ॥**

**चन्द्रावतंसकलितां शरदिन्दुशुभ्रां**
**पञ्चाशदक्षरमयीं हृदि भावयन्ति ।**
**त्वां पुस्तकं जपवटीममृताढ्यकुम्भं**
**व्याख्यां च हस्तकमलैर्दधतीं त्रिनेत्राम्**[3] **॥**

इत्येवं बहूनि स्तुतिपद्यानि प्रोक्तानि, येषु भगवत्या विशुद्धं स्वरूपम्, विशुद्धं चरित्रम्, अपारकारुण्यम्, अनितरसाधारणी भक्तवत्सलता, सद्यो भक्तार्तिनाशनपरायणता, शीघ्रमेव प्रचुरसमृद्धिप्रदानम्—इत्येवं बहवो गुणाः समक्षमायान्ति । अन्ते च—

**स्तुत्याऽनया शङ्करधर्मपत्नीं मातङ्गिनीं वागधिदेवतां ताम् ।**
**स्तुवन्ति ये भक्तियुता मनुष्याः परां श्रियं नित्यमुपाश्रयन्ति**[4] **॥**

---

१. शा० ति०, पदार्थादर्श, पृ० ३७७ ; २. शा० ति० १२।५८-६६ ।
३. तत्रैव—१२।८४-८५; ४. तत्रैव—१२।१६६ ।

ब्रह्म-विष्णु-महेशवन्द्याया अज्ञानतिमिरध्वंसिन्याः संसारार्णवतारिकायाः सच्चिदानन्दस्वरूपिण्याः पराविद्यायास्त्रिपुरादेव्याः समर्चनेन ध्यानेन तन्मन्त्रजपेन सकलेष्टसिद्धिर्भवति ध्रुवम् ।

मान्या विद्वांसो विदन्त्येव यद् जगन्नियन्ता परमेश्वरः सृष्टिं निर्माय मानवानां शरीरं च विरचय्य तेषां समाजस्य रचनायै, रक्षायै, तदीयजन्ममरण-बन्धनाद् विमुक्तये, परमानन्दावाप्त्यै च केचन विशेषनियमा अवश्यं दातव्या आसन् । त एव नियमा मन्त्रब्राह्मणारण्यकोपनिषदात्मकवेदरूपेण उपदिष्टाः । स्मृति-शास्त्रादीनां तन्मूलकत्वेन तदर्थप्रतिपादकत्वेन च प्रामाण्यमस्तीति सुप्रसिद्धमेव ।

अनाद्यविद्योपाधिक एव परमेश्वरः सृष्टिं कर्तुं पारयति । इममाशयं श्रुति-रागमश्च प्रतिपादयतः । तथा हि—'इन्द्रो मायाभिः पुरुरूप ईयते' इति । 'शिवो हि शक्तिरहितः शक्तः कर्तुं न किञ्चन' इति ।

आस्तिकानां सर्वेषामेव दर्शनानामागमानां वा स्रोतांसि वेदा एव अत्र नास्ति काचन संशीतिः । इयान् विशेषः — वेदाः परमेशितुर्निःश्वासभूताः स्वत एवाविर्भ-वन्ति, आगमास्तु परम्परामनुसरन्ति ।

तेषामाद्यः प्रवक्ता भवानीनाथो विश्वनाथः । स एव पार्वतीमुपदिदेश तद्रहस्यजातम् । उक्तं च स्वच्छन्दतन्त्रे—

**आगतं शिववक्त्रेभ्यो गतं च गिरिजामुखे ।**
**मतं हि वासुदेवस्य तस्मादागम उच्यते ।।** इति ।

वचनेनानेन स्पष्टं प्रतीयते यद् आगमशास्त्रं वासुदेवाभिमतं भगवतः शिवात् पार्वतीभगवत्याः श्रोत्रविषयतामागतमस्ति ।

इदमपि विचारणीयमस्ति आगमोपदेशो गुरुपरम्परासम्बन्धमपेक्षमाणः किञ्चिदनुशासनमपि सम्पादयति । आगमेन शिष्याननुशासति गुरव इति कृत्वा शास्त्रत्वमपि आगमानां स्वीकर्तव्यम् । आचार्यः श्रीहरिर्व्याकरणशास्त्रस्यागमत्वं स्पष्टमुक्तवान्—

**"तद् व्याकरणमागम्य परं ब्रह्माधिगम्यते" ।।**

तत्र सर्वेषु वेदेषु कर्मोपासनाब्रह्मभेदेन काण्डत्रयं समुल्लसितमस्ति । तत्र जैमिनिप्रभृतिभिराचार्यैर्मीमांसाशास्त्रद्वारा कर्मकाण्डं सम्यक्त्वेन विवृतम् । उपा-सनाकाण्डं नारदादिभिर्देवर्षिभिः, ब्रह्मकाण्डं भगवद्व्यासादिभिर्ब्रह्मसूत्रादिद्वारा निरूपितम् । तत्र कर्मकाण्डाच्चित्तशुद्धिः, स्वर्गादिप्राप्तिश्च भवति । ब्रह्मकाण्डमेव ज्ञानकाण्डम्, ततश्च मुक्तिरूपा परमा गतिः प्राप्यते । मध्यपात्युपासनाकाण्डमेव आगमशास्त्रात्मकं स्वीकार्यम् ।

तत्रोत्पलाचार्यशिष्येण श्रीलक्ष्मणाचार्येण पूर्वतन्त्राणामनेकेषामेकैकमन्त्र-विधानकथनप्रवृत्तानामतिविस्तृतानां गभीरविषयगर्भाणामेकस्मिन् सर्वमन्त्रविधान-मभोप्सूनामिदानीन्तनानामल्पमतीनामल्पायुषां पुरुषाणां दुरवगाहत्वमवलोक्याति-करुणया शारदातिलकाभिधानतन्त्रग्रन्थशिरोमणिर्विरच्यते स्म ।

शारदातिलकशब्दस्य व्युत्पत्तिलभ्यो गभीरोऽर्थः पूर्वं भूमिकाप्रस्तावे उक्त एव ।

मान्या विद्वांसो विदाङ्कुर्वन्तु यत् सकलागमशास्त्रीयविषयाणामेकस्मिन्नेव ग्रन्थे समवायमालोच्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालये द्वादशपटलान्तः शारदातिलका-भिधस्तन्त्रग्रन्थमूर्द्धन्यः प्रकाश्यमानो वर्तत इति परमं प्रमोदस्थानम् ।

**'श्रेयांसि बहुविघ्नानि'** इति शिष्टोक्तिसत्त्वेऽपि दुर्लभस्यास्य ग्रन्थस्य अचिर-प्रकाशने वर्तमानकुलपतिपदं समलङ्कुर्वतां प्राच्यप्रतीच्योभयविधविद्यापारदृश्वनां महामेधाविनां **डॉ० मण्डनमिश्र**महोदयानां समीचीनप्रेरणैव महान् हेतुः । मान्याः श्रीमिश्रमहानुभावाः सततं धन्यवादैः समाद्रियन्ते ।

पुनश्चास्य ग्रन्थरत्नस्य प्रकाशने प्रकाशनाधिकारिणः **श्रीहरिश्चन्द्र-मणित्रिपाठिनः**, प्राग्रूपसंशोधकस्य **श्रीहरिवंशकुमारपाण्डेयस्य,** तत्सहयोगिकर्म-चारिणाम्, माधोप्रससञ्चालकमहोदयानां तत्रस्थेतरकर्मचारिणाम् अत्रत्याचार्यो-पाचार्यादीनाम्, छात्राणां च सहयोगेन कठिनतरमपि एतत् कार्यं सम्पूर्णतामलभत, एतदर्थं ते सर्वे शुभाशोराशिभिः समेध्यन्ते बहुकार्यव्यस्ततया स्वास्थ्यस्य समयस्य चाल्पीयस्त्वेन भ्रमाद् मुद्रणदोषाद्वा नूनं त्रुटयः सम्भाव्यन्ते, सुधीभिर्यदि ताः संसूच्यन्ते, तर्हि अहं तदीयकृतज्ञतामावक्ष्यामि ।

अन्ते च भगवन्तौ भवानीविश्वनाथौ प्रार्थये यत्तदीयानुग्रहेणैष विश्वविद्यालय ईदृशे महनीयकार्ये सर्वदा सर्वथा च तत्परतां भजेतेति स्वीयं हार्दं प्रकाशयति—

**वाराणस्याम्**
नागपञ्चम्याम्,
वि० सं० २०५४
( ८-८-१९९७ ई० )

**करुणापतित्रिपाठी**
सम्मानिताध्यापकः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# विषयानुक्रमणिका

## प्रथमपटलस्य

## द्वितीयपटलस्य

## तृतीयपटलस्य

**चतुर्थपटलस्य**

**पञ्चमपटलस्य**

**षष्ठपटलस्य**

## सप्तमपटलस्य

**अष्टमपटलस्य**



**नवमपटलस्य**

## दशमपटलस्थ

## एकादशपटलस्य



## द्वादशपटलस्य

श्रीलक्ष्मणदेशिकेन्द्रविरचितं

# शारदातिलकम्

श्रीमद्राघवभट्टकृतपदार्थादर्शव्याख्याविभूषितम्

# अथ शारदातिलकम्

श्रीमद्राघवभट्टकृतपदार्थादर्शव्याख्याविभूषितम्

## प्रथमः पटलः

नित्यानन्दवपुर्निरन्तरगलत्पञ्चाशदर्णैः क्रमाद्
व्याप्तं येन चराचरात्मकमिदं शब्दार्थरूपं जगत् ।
शब्दब्रह्म यदूचिरे सुकृतिनश्चैतन्यमन्तर्गतं
तद्वोऽव्यादनिशं शशाङ्कसदनं वाचामधीशं महः ॥ १ ॥

---

श्रीकण्ठं निजताण्डवप्रवणताप्रोद्दाममोदोदयं
पश्यन्त्याः कुतुकाद्भुतप्रियतया सञ्जातभावं मुहुः ।
मन्दान्दोलितदुग्धसिन्धुलहरीलीलालसं लोचन-
प्रान्तालोकनमातनोतु भवतां भूतिम्भवान्याः शुभाम् ॥ १ ॥

संसेव्यमानमृषिभिः सनकादिमुख्यैर्योगैकगम्यमविनश्वरमादिभूतम् ।
संसारहृन्निगमसारविचारसारं शैवं महो मनसि मे मुदमादधातु ॥ २ ॥

भद्राय भवतां भूयाद्भारती भक्तिभाविता ।
स्मृतेरुज्जृम्भते यस्या वाग्विलासोऽतिदुर्लभः ॥ ३ ॥

शारदातिलके तन्त्रे गुरूणामुपदेशतः ।
पदार्थादर्शटीकेयं राघवेण विरच्यते ॥ ४ ॥

सम्प्रदायागतं किञ्चिद् गणितागमसम्मतम् ।
यदुक्तमत्र तत्सन्तो विचारयितुमर्हथ ॥ ५ ॥

पिशुनो दूषकश्चेत्स्यान्न तद्दोषाय दूषणम् ।
दोषावहाहिविकृतिर्न स्वभावो हि दुस्त्यजः ॥ ६ ॥

अथेश्वरः सर्वा अपि श्रुतीर्भवपाशबद्धानां जन्तूनां स्वर्गाय मुक्तये च समुपदिशति स्म । अन्येषां तु स्मृतिशास्त्रादीनां तन्मूलकत्वेन तदर्थप्रतिपादकत्वेन च प्रामाण्यमिति

सुप्रसिद्धतरम् । अस्यास्त्वागमस्मृतेः कथं तन्मूलकत्वम् ? अन्यच्च तैरेव विशेषेण पर्यालोचितैः स्वर्गोऽथ वा मुक्तिरपि भविष्यतीति किमनयेति प्राप्ते, ब्रूमः—"स ऐक्षत बहु स्यां प्रजायेये"ति, तथा "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञासस्वे"त्युपक्रम्य "आनन्दाद्धेव खल्विमानि भूतानि जायन्ते, आनन्देन जातानि जीवन्ति, आनन्दं प्रयन्त्यभिसंविशन्ती"त्यादि "इदं सर्वं यदयमात्मैवे"त्यन्तेनोपसंहृतम् । अतः "उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम् । अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये" इत्युक्तत्वात् । उपक्रमोपसंहाराभ्यां स्वलीलारूपानाद्यनिवाच्याऽविद्यासहायसम्पन्नं परमानन्दस्वरूपं नित्यशुद्धबुद्धस्वभावं परब्रह्मैव स्वात्मविवर्त्तरूपं सकलं जगत् ससर्जेति श्रुतिवाक्यप्रतिपादितोऽर्थः ।

नन्वस्तु जगत्सृष्टिकर्तृत्वं ब्रह्मणः, अनाद्यविद्याङ्गीकरणं किमर्थमिति चेत्, तया विनाऽसङ्गस्य तत्कारणतैवानुपपन्ना, तथेममर्थं श्रुत्यागमावपि वदतः—"इन्द्रो मायाभिः पुरुरूप इयते" इति । "शिवो हि शक्तिरहितः शक्तः कर्तुं न किञ्चन" इति । एवं जाते जगति निजकर्म्मपाशबद्धा जन्तवोऽनात्मज्ञा उत्पत्तिमरणप्रवाहपतिता नाशक्नुवन् संसारसिन्धुं तरीतुम् । एवम्भूतान् तानवलोक्य परमकरुणतया किञ्चिदुपाधिविशिष्टः सर्वाः श्रुतीः समुपदिशति स्म ।

तत्र सर्वासु श्रुतिषु काण्डत्रयं कर्मोपासनाब्रह्मभेदेन । तत्र कर्मकाण्डं **जैमिनिप्रभृतिभिः** सम्यक्तया विवृतम् । इदमुपासनाकाण्डं **नारदादिभि**र्ब्रह्मकाण्डं **भगवद्व्यासादिभि**रिति स्मृ(श्रु)तिमूलकता अस्य प्रत्यक्षोपलब्धा । श्रुतिमूलकता तु रामपूर्वोत्तरतापिनीयनृसिंहपूर्वोत्तरतापिनीयसौराष्टाक्षरशैवपञ्चाक्षरात्मिका च साक्षाच्छ्रुतिरुपलभ्यत एव । तत्र कर्मकाण्डे सर्वोऽप्यधिकारी । मुमुक्षोरपि तत्त्वज्ञानपर्यन्तं स्वचित्तशुद्ध्यर्थं च कर्मकरणेऽधिकारसम्भवात् । तद्वदुपासनाकाण्डेऽपि । यतः साकारोपासनातः स्वर्गादि बहु फलं भवति, क्रमतो मुक्तिश्च, कर्मकाण्डात्तु स्वर्गादिफलं बहुतरव्ययथाऽऽयासेन भवति । ब्रह्मकाण्डान् मुक्तिरपि आदरनैरन्तर्यदीर्घकालाभ्याससाध्याऽनेकेषु जन्मसु तादृशेष्वेव गतेषु भवति । "अनेकजन्मसंसिद्धस्ततो याति परां गतिमि"ति वचनात्,अत एतदुपासनाकाण्डमेवागमशास्त्रात्मकं गरीय इति सिद्धम् ।

तत्रोत्पलाचार्यपूज्यपादशिष्यश्रीलक्ष्मणाचार्यः पूर्वतन्त्राणामनेकेषामेकैकमन्त्रविधानकथनप्रवृत्तानामतिविततानां गम्भीराणामिदानीन्तनानामल्पमतीनामल्पायुषामेकस्मिन्सर्वमन्त्रविधानमभीप्सूनां पुंसामशक्त्या दुरवगाहत्वमवलोक्यातिकृपालुः शारदातिलकतन्त्रं चिकीर्षुश्चिकीर्षितस्याविघ्नेन समाप्त्यर्थं प्रचयगम (१) नार्थं च सकलशिष्टैकवाक्यतया"अभिमतकर्मारम्भसमये तत्समाप्तिकामैर्मङ्गलमाचरणीयम्" इति सदाचारानुमितश्रुतिबोधितं परदेवतानुस्मरणलक्षणं मङ्गलं शिष्यशिक्षार्थमुपनिबध्नन्नाह—**नित्येति** । तन्महोऽनिशं वोऽव्यादित्यन्वयः । तन्मह एतावतैव परदेवतानुस्मरणस्य सिद्धौ सत्यामप्यस्य पद्यस्य यत्किञ्चित् क्रियापेक्षायां विघ्नोपशमनद्वाराऽभिलषितफलवितरण-

प्रवणत्वरूपावनक्रियानिर्देशेन देवतासाम्मुख्यं दर्शितम् । तत्र सामान्यकर्मसम्बन्धे प्राप्ते क्रियमाणग्रन्थस्य निर्विघ्नपाठमभिप्रेप्सोः शिष्योपरि कृपां सूचयतो व इति कर्मनिर्देशः । वो युष्मान् शिष्यान् पातु इत्यर्थः । एषामेवात्र सम्बोधनयोग्यत्वात् सम्बोधनप्रधानत्वाच्च युष्मदर्थस्य यतः शिष्यकृपयैव विदितवेद्य आचार्यो ग्रन्थकरणे प्रवृत्तः। तथा च तेषां कञ्चित्कालमवने सिद्धे निर्विघ्नं पाठसमाप्तावपि तच्छिष्यद्वारा प्रचारमिच्छोरनिशमित्युक्तिः, एतेन सर्वदाऽवने सिद्धे स्वशिष्याणां तच्छिष्याणामपि च निर्विघ्नपाठसिद्धौ ग्रन्थप्रचारो भविष्यतीत्याशयः।

तन्मह इत्यपेक्षायामाह—**नित्यानन्दवपुरिति** । नित्यो योऽयमानन्दः स वपुर्यस्य । एतेन शक्त्यसम्भिन्नं परशिवस्वरूपमुक्तम् । ननु "शक्त्या विना शिवे सूक्ष्मे नामधाम न विद्यते" इत्युक्तेर्निर्गुणस्यासङ्गस्य निराकारस्य तस्य कथमवनक्रियाकर्तृत्वमित्याह—**वाचामधीशमिति** । अनेन शक्त्युपहितं सदाशिवात्मकं रूपं वागुपदेष्टृत्वेनोक्तम् । ननु वागुपदेष्टृत्वं चतुर्मुखोपाध्युपर्ि तस्यापि वर्तते, तन्निवृत्त्यर्थमाह—**शशाङ्कसदनमिति** । शशाङ्कस्य चन्द्रस्य सदनं स्थानं चन्द्रकलावतंसमित्यर्थः । शब्दसृष्टेरत्र मुख्यत्वाद् मन्त्रमयं तत्स्वरूपं सूचयति, अनिशं शशाङ्कसदनमिति पदाभ्याम् । अः विष्णुः,तेन संकर्षणस्तेन औ ए ( तेन ) तत् सहिता निशा हकारो यत्रेत्युत्तरपदलोपी बहुव्रीहिस्तेन हाविति सिद्धम् । शशाङ्केत्यादिना बिन्दुरुक्तः, वागैश्वर्यमुपबृंहयन् वक्ष्यमाणां शब्दार्थसृष्टिं सूचयन् व्यापकतामाह—**येन चराचरात्मकमिदं** स्थावरजङ्गमात्मकं शब्दार्थरूपं जगत् क्रमाद् व्याप्तम्, कैः ? निरन्तरमनवरतं गलन्तो व्यक्तीभवन्तः पञ्चाशदर्णा वर्णास्तैः । अत्र "समासे वर्णशब्दस्य वा वलोपो वक्तव्यः"इति वर्णशब्द इव वलोपे अर्णशब्दो वर्णवाची ।

केचन नित्येत्याद्यर्णैरित्यन्तमेकमेव पदमित्याहुः । अत्र वर्णानामेकपञ्चाशत्त्वेऽपि सामीप्यसम्बन्धेन लक्षणया पञ्चाशत्त्वमुक्तम्, अन्वयानुपपत्ति वत्तात्पर्यानुपपत्तेरपि लक्षणाबीजस्याभ्युपगतत्वात् । अथवा "मकारः पुरुषो यतः" इत्युक्तेस्तस्य स्वस्वरूपत्वात् पञ्चाशदित्युक्तिः । यद्वा क्षकारस्य कषसंयोगात्मकत्वात् तयोरुपदेशेनैवास्योपदेश इत्यपुनरुक्तं पञ्चाशद्ग्रहणम् । यद्वा विसर्गस्य केवलशक्तित्वात् पञ्चभूतात्मकत्वाभावात् सर्ववर्णोत्पत्तिहेतुत्वाच्च तं त्यक्त्वा तथोक्तिः । तदुक्तम्—"अमा ( १ ) योऽनन्त्य एव वे"ति । क्वचिद्बाह्येऽपि तावतामेवोपयोगाद्वा तथोक्तिः ।

यद्वा मूलाधारादि-आज्ञान्त-षट्चक्रेषु पञ्चाशद्वर्णानामेव स्थितत्वात् पञ्चाशदित्युक्तिः । अनयोर्व्याख्यानयोर्बहिरान्तरभेदेन व्यवस्था ज्ञेया । आन्तरस्य च मुख्यत्वात् शास्त्रे सर्वत्र मुख्येन व्यवहार इति ज्ञेयम् । अनेनान्तर्मातृकान्यासोऽपि सूचितः । स चान्त्यपटले कुण्डलिनीस्तुतौ स्फुटीभविष्यति । अत एव द्वितीयादिचतुर्विंशतिपटलान्तं यत्प्रपञ्चितम्, तत्सर्वं मातृकाविकार इत्यपि सूचितम् ।

ननु "सर्वव्यापी सदाशिवः"इति वक्ष्यमाणत्वात् तस्य स्वत एव सर्वव्यापित्वे कुतः कैरिति कारणापेक्षेति चेत्, सत्यम्, तस्य स्वत एव सर्वव्यापित्वम्; किन्तु अत्र शास्त्र-

मातङ्गि ! लीलागमने भवत्याः सिञ्जानमञ्जीरमिषाद्भजन्ते ।
मातस्त्वदीयं चरणारविन्दमकृत्रिमाणां वचसां निगुम्फाः ॥१६०॥
पदात्पदं सिञ्जितनूपुराभ्यां कृतार्थयन्ती पदवीं पदाभ्याम् ।
आस्फालयन्ती कलवल्लकीं तां मातङ्गिनी मद्धृदयं धिनोतु ॥१६१॥
नीलांशुकाबद्धनितम्बबिम्बां तालीदलेनार्पितकर्णभूषाम् ।
माध्वीमदाघूर्णितनेत्रपद्मां घनस्तनीं शम्भुवधूं नमामि ॥१६२॥
तडिल्लताकान्तमनर्घ्यभूषं चिरेण लक्ष्यं नवलोमराज्या ।
स्मरामि भक्त्या जगतामधीशं वलित्रयाङ्कं तव मध्यबिम्बम् ॥१६३॥
नीलोत्पलानां श्रियमावहन्तीं कान्त्या कटाक्षैः कमलाकराणाम् ।
कदम्बमालाञ्चितकेशपाशां मातङ्गकन्यां हृदि भावयामः ॥१६४॥
ध्यायेयमारक्तकपोलकान्तं बिम्बाधरन्यस्तललामरम्यम् ।
आलोलनीलालकमायताक्षं मन्दस्मितं ते वदनं महेशि ! ॥१६५॥
स्तुत्यानया शंकरधर्मपत्नीं मातङ्गिनीं वागधिदेवतां ताम् ।
स्तुवन्ति ये भक्तियुता मनुष्याः परां श्रियं नित्यमुपाश्रयन्ति ॥१६६॥

॥ इति श्रीशारदातिलके द्वादशः पटलः ॥ १२ ॥

---

अकृत्रिमाणां वचसां विगुम्फा वेदाः । पदात्पदमिति । पदे पदे इत्यर्थः । कृतार्थयन्ती "स्वगमनेने"ति शेषः । धिनोतु प्रीणयतु ॥१६०-१६२॥

कदाचिल्लक्ष्यं कदाचिदलक्ष्यमिति तडिल्लताकान्तम् । अनर्घ्यभूषं निश्चितस्य वपुषा करणात् । इत्थञ्चेत् शरीरस्थितिः कथमित्याह—चिरेणेति । लक्ष्यमनुमेयम्, न प्रत्यक्षदृश्यमिति भावः ॥१६३॥

कान्त्या देहकान्त्या । नीलोत्पलानां श्रियमाहरन्ती कटाक्षैः कमलाकराणां श्रियमाहरन्तीति सम्बन्धः । मातङ्गकन्यामिति । मातङ्गपुत्रीरूपामित्यर्थः ॥१६४॥

बिम्बाधर एव न्यस्तं ललाम भूषाविशेषस्तेन रम्यम् ॥१६५-१६६॥

॥ इति श्रीशारदातिलकटीकायां सत्सम्प्रदायकृतव्याख्यायां पदार्थादर्शाभिख्यायां द्वादशः पटलः ॥ १२ ॥